किंच,

यस्या यस्या भवेद्गर्भः सोत्पादयति कन्यकाम्।
पुरुषाणां प्रचारोऽत्र गगनाम्बुजगन्धवत्॥ २७॥

किंच,

एतासां स्वामिनी येयं प्रम्लोचा नाम वर्त्तते।
तदपाङ्गशरासङ्गस्त्वामप्यर्ज्जुनं[1] मोहयेत्॥ २८॥

अर्ज्जुनः—(स्वगतम्)

शरैरलं सरोजाद्याः कटाक्षा एव दुःसहाः।
यथेन्दुर्विरहार्त्तानां न तथा वडवानलः॥ ३०॥

(प्रकाशम्) महाभाग! अहमप्यत्र प्रतिक्रियाविमूढोऽस्मि।

सात्यकिः—

एतासां विषकन्यानां वयमत्रागताः पुरः।
सर्वथाप्यशुभोदर्कौ यासां जयपराजयौ॥ ३१॥

प्रद्युम्नः—(निर्वर्ण्य)

एषाग्रतः कठिनशुम्भदुरोजकुम्भ—
माणिक्यकान्तिचयचित्रितकञ्चुकान्ता।
संमोहनास्त्रमिव सन्दधतो दृगन्तं
शृङ्गारवीररसयोर्विषमा समस्या[2]॥ ३२॥

तदयं मुच्यतां तुरङ्गम इति।

---

1. ख. ० सङ्गः स्वाम्यप्यर्ज्जुन ०
2. समास्या in Mss.

अर्ज्जुनः—एवं युज्यते ।

सात्यकिः—( तदन्तिकमुपसृत्य ) महाभागे !

धर्मात्मजस्य सवने ययुरेष मुक्तो
बद्धो विनोदकुतुकाद्भवतीभिरद्य ।
दुर्वृत्तकौरवजये विजयोऽयमास्ते
तस्याग्रतः सविनयेन समर्पणीयः ॥ ३३ ॥

प्रम्लोचा—( मदनमेखलामीक्षते )

मदनमेखला—महाभाग !

परन्तपधनञ्जयो यदि तनोति देव्याः पुरः
प्रियप्रणयमञ्जलिं तदिह मुच्यते सैन्धवः ।
इदं यदि न सम्मतं समरसन्नतं सन्ततं
करे कुरुत कार्मुकं कदनकर्मणः कार्मणम् ॥ ३४ ॥

प्रम्लोचा—( सलज्जम् स्वगतम् ) कथमत्यन्तमनया मनीषितं विवृतम् !

अर्ज्जुनः—[1]एनां प्रणयकोपेषु धन्य एवानुनेष्यति ।
कुसुमेषुं विना कोऽस्यां धनुरुन्नमयिष्यति ॥ ३५ ॥

तदेतदुक्तप्रकारयोरहमत्यन्तदूरवर्त्ती । अलमनेन स्वकल्पितनिष्फलेन निर्बन्धविशेषेण ।

वृष०—भवतु ।

बहुदेशागतश्रान्तैः क्षणमस्माभिरद्भुतम् ।
अभिनेयं वधूवृन्दैर्द्रष्टव्यं वीरनाटकम् ॥ ३६ ॥

---

1. ख. एवम् एनं etc.

अर्जुनः—(अपवार्य) अलमनया कलहप्ररोचनया ।

न मन्तव्या शीतलेति प्रमदापि रसोत्कटा ।
कादम्बिन्यपि वर्षासु मुञ्चन्तीरम्मदं क्षणात् ॥ ३७ ॥

प्रद्युम्नः—(सानुक्रोशम्)

मुच्यतां किं विवादेन वाजी राजीवलोचने ।
करोन्नमितगाण्डीवं मध्यमं पश्य पाण्डवम् ॥ ३८ ॥

प्रम्लोचा—ततः किम् ? जानीम एवार्जुनं सायुधम् ।

वृष— यदि नाभेद्यकवचं स्त्रीहत्यापातकं भवेत् ।
विग्रहेण समं गच्छेदद्य ते हयविग्रहः ॥ ३९ ॥

मदनमेखला—(सासूयम्)

स्त्रीपुंनपुंसकं लिङ्गं शाब्दिकैरेव चिन्त्यते ।
शूराः स्वकर्मभिर्ज्ञेयाः शूरता धनुषि स्थिता ॥ ४० ॥

वृष—(सपरिहासं) किमेताभिः पुंश्चलीभिरुक्तिप्रत्युक्तिकया ?

मदनमेखला—(सरोषम्) आः पामर ! प्रवीरदेवीमप्याजन्मब्रह्मचारिणीं दुःश्रवणेन वचसा धिक्षिपसि ।

वृष—(सोपहासम्)

घोटकब्रह्मचर्यं[1] वः स्त्रीराज्ये पुरुषैर्विना ।
तन्मुच्यतामयं वाजी सन्त्यन्ये बहवो हयाः ॥ ४१ ॥

---

1. A Sanskritized form of a colloquial mode of contemptuous speaking (here with regard to ब्रह्मचर्यं of the women)

प्रम्लोचा – ( मुखमवनम्य तिष्ठति )

मदनमेखला – ( सरोषम् )

वीराः समरगम्भीरा धीराः परिहसन्ति किम् ?
भवतां वा जपालानामुचितं ग्राम्यमुत्तरम् ॥ ४२ ॥

प्रम्लोचा – सखि ! कर्णस्य तनयमिति ज्ञात्वाप्येनमालपसि ।

यः कर्णः कुरुपतिदुर्णयैकहेतुः[1]
पाञ्चालीपरिभवमोदमानसभ्यः ।
आक्षेपाननुचितदुःश्रवान् वदन्तं
तस्यामुं तनयमवेहि वाचिशूरम् ॥ ४३ ॥

अर्जुनः—( स्वगतम् ) कथमनयास्मत्पक्षपातिन्येव गम्भीरमुपन्यस्यते वचनचातुरी ! ( प्रकाशम् ) वृषकेतोऽलं वाक्कलहेन । तद्विरमतु भवान् । ( सानुनयम् )[2] अयि महाभागे ! महात्मनां किल—

आमुक्तमुक्ताहारेषु स्तनभारेषु सुभ्रुवाम् ।
पतन्ति शातशिखरा न खरा नखराः शराः ॥ ४४ ॥

प्रद्युम्नः—महाभागे, समुचितमेव ते वीरायितम् । तदस्माकमतिथिसत्कार एवायमस्तु तुरङ्गमः ।

प्रम्लोचा[3] – ( अपवार्य ) सखि, श्लिष्टमाचष्टे ।

मदनमेखला – ( अपवार्य ) सत्यमाह ।

---

1. दुर्णैक in the Ms.
2. ख. omits.
   ग. worm-eaten.
3. ख. omits from महाभागे समुचित ० etc to प्रम्लोचा

विषमेषुरणोद्योगे पर्यस्तमकरध्वजे ।
देव्या वीरायिते नूनमर्ज्जुनोऽप्यधरोभवेत् ॥ ४५ ॥

प्रम्ल्लोचा—( सहासरोषम् ) धिक् त्वाम् । त्वमेव विपक्षपक्षमाश्रितासि ।

मदनमेखला—( प्रद्युम्नं प्रति ) महाभाग ! किमनेन वृथात्रैदग्ध्यत्रासनादुर्ललितेनोलापकोलाहलेन ।

धनञ्जयः काम इवैष रत्याः
करोतु देव्याः प्रणयप्रणामम् ।
न चेदिदं राम इवाततव्यं
करोतु हस्ते कठिनं शरासम् ॥ ४६ ॥

सात्यकिः—तदकर्त्तव्यमिति मन्थराः स्मः ।

गवां द्विजानामबलाजनानां
वीराः शरान् बिभ्रते रक्षणार्थम् ।
जातेऽपि तेषामनयोपचारे
न रक्षणीयं परिनक्षणीयम् ॥ ४७ ॥

उत्साहवती—

एतदर्थं प्रवीराणां[1] का सा धर्मविचारणा ।
छिन्नं केन विचारेण द्रोणस्यापि गुरोः शिरः ॥ ४८ ॥

अर्ज्जुनः—( सलज्जमिव तिष्ठति )

सात्यकिः—( सरोषम् ) किमतःपरमपेक्षते ?

कुरुकर्णधारगुरुकर्णभेदनोद्गतघोणिकर्णशरदुर्द्धरस्य[2] ते ।
कुनटी विभूषितमुखो नटीव यत्प्रकटीकरोति कुलटाऽपि पौरुषम् ॥४९॥

---

1. क. इदमन्य ०
   ख. इदं वाक्यवीराणां
   ग. इदमर्थं
2. ख. ० दृद्धर ०

उत्साहवती - धिक् पापोऽनुचितं प्रलपति ।

मदनमेखला – ( सरोषम् ) किमात्थ रे ! किमात्थ ?

भूरिश्रवोभूजाङ्कूरिकर्षणोल्लुञ्चिताञ्चलान् ।[1]
वहन्न लज्जसे पाप दुर्यशांसीव कुन्तजान् ॥ ५० ॥

सात्यकिः—( सरोषं च्छुरिकामाकर्षयन् )

ताडकेवास्तु पापेयं ताडिता मम सायकैः ।
यद्वा सूर्पणखेवास्तां मुखादुत्कृत्तनासिका ॥ ५१ ॥

अर्ज्जुनः—( तं निवार्य्य ) महाभाग ! विरमतु सम्भाराः । (उत्साहवतीमवलोक्य-स्वगतम् )

अस्याश्चापेन रूपेण भुवनत्रयमोहिना ।
शौर्य्यं च ब्रह्मचर्य्यं च न जाने किं भविष्यति ॥ ५२ ॥

( प्रकाशम् )

भुजयोरपकीर्त्तिर्नः कार्मुकस्यापि दुर्यशः ।
कठिनस्तनसन्नाहे वधूवक्षसि यच्छराः ॥ ५३ ॥

उत्साहवती—( सरोषम् )

यद्याक्रान्ततुरङ्गाभिरङ्गनाभिर्न युध्यते ।
विराटनगरक्लीबेनास्माभिर्युध्यते कथम् ॥ ५४ ॥

तद्गच्छत यथागतं तुरङ्गरक्षका निजनगरम् ।

अर्ज्जुनः—( स्वगतम् ) अस्याः किल,

---

1. क. भूरिश्रवाद् भुजाद् भूरी ०
ख. भूरिश्रवात्र् जा ०
ग. ० कर्षितोल्लुञ्चिताञ्चलान्

आरज्यद्विषमदृगञ्जलाभिरामं
प्रत्यग्रोदिततुहीनांशुबिम्बरम्यम् ।
आक्षेपोत्तरतरलाधरं मुखाब्जं
पाञ्चालीमुखसदृशं विलोकयामि ॥ ५५ ॥

किं च,

देवव्रतप्रमुखवीरसहस्रबाण—
पातेऽपि नैव हृदयं व्यथते ममैवम् ।
अस्याः कथं मदनहल्लकमल्लतुल्य—[1]
नेत्राञ्चलाद्विचलतोऽपि बिभेमि भूयः ॥ ५६ ॥

प्रद्युम्नः—( सहासरोषम् ) किमुच्यताम् ।

कुरुवीरवारणकलाधुरन्धरं
न हि वेत्सि भीरु पुरतो धनञ्जयम् ।
समयेन वीक्षितमिदं महाद्भुतं
गरुडाग्रतोऽपि भुजगीफणोन्नतिः ॥ ५७ ॥

प्रम्लोचा—( सहासरोषम् )

हतं यत्कौरवं सैन्यं तेन कस्येह गौरवम् ।
सारथ्ये रथिनो नैव लीला काचन सारथेः ॥ ५८ ॥[2]

किं च,

सारथिं कनकपिञ्जराम्बरं पुण्डरीकपरिणाहिलोचनम् ।
चञ्चलाकलितपीनवक्षसं नाबलाभिरिह गण्यतेऽर्जुनः ॥ ५९ ॥

अर्जुनः—( सानन्दम् ) उचितमालपन्त्यास्तत्रभवत्या ग्राह्यमेवेदं शिरसि वचनम् ।
किन्तु तुरगग्रहग्रहेणैव कदर्थयसि नः ।

1. क. तुल्यं ०

2. Obviously विना is to be supplied or added to the verse to get the meaning.

मदनमेखला—

यशो गृहीतमस्माभिर्भवतां वाजिगौरवात् ।
अलं वाग्भिर्निवर्त्तन्तां वृथा सायकधारिणः ॥ ६० ॥

सात्यकिः—( सरोषम् )

एतां धनुर्गुणैर्बद्ध्वावध्या वाचाटयानया ।
महारयं हयं वेगादाहरामि विनाहवम् ॥ ६१ ॥

मदनमेखला—अर्ज्जुनं वाजिनं वापि जेतुं शक्ता वयं गुणैः
वाजिनं वाजिनं वाद्य निर्जं मुक्त्वा समेष्यथ ॥ ६२ ॥

प्रम्लोचा—समादिश्यतां सङ्गरोपकरणाय विलासिनीवर्गः । (सात्यकिं प्रति) तदेहि विमर्दसहां सर्वंसहामवतरामः । (इति सर्वाभिः ससंभ्रमोत्थिताभिर्निष्क्रामितुमिच्छन्ती विवलिताननमर्ज्जुनमवलोक्य स्वगतम् )

अयं स वीरः कुरुकामिनीनां
सीमन्तसिन्दूरशिखापहर्त्ता ।[1]
सखा मुरारेर्द्रुपदात्मजाया
वक्षोजपत्रावलिचित्रकर्त्ता ॥ ६३ ॥ (इति निष्क्रान्ता)

अर्ज्जुनः—( स्वगतम् ) कथं निर्गता भगवती !

शरासनं रत्नमयं दधाना
शरं मणिद्योतितसारपुङ्खम् ।
गतैव मत्तद्विपगामिनीयं
सम्मोहिनी शक्तिरिव स्मरस्य ॥ ६४ ॥

---

1. ग. प्रहर्त्ता ०

किं च,

सिञ्जानमञ्जीररवाभिराम-
धनुर्द्धरीभिस्तलिनोदरीभिः ।
आरक्तनेत्राभिरुपास्यमाना
मानाज्ञसा मे लिखितास्त चित्ते ॥ ६५ ॥

( प्रकाशम् ) सात्यके[1] ! अनायत्तप्रवृत्तेऽस्मिन् दुर्यशोप्रनिधाने[2] प्रधने भवता वनितावधशङ्कितेनैव[3] प्रवर्त्तितव्यम् । ( प्रद्युम्नं प्रति ) भवानप्य-पूर्वलोचितेन[4] संग्रामेण[5] सकलैः सैनिकैः सात्यकिमनुपालयतु, यावदहमत्रैव रथाधिरूढः क्षणमवलोकयामि प्रमदानां विनोदम् ।

सर्वे—यथाज्ञापयन्ति महाभागाः ( इति निष्क्रान्ताः ) ।

अर्ज्जुनः—कः कोऽत्र भोः । समानीयतां रथः । (प्रविश्य रथमादाय)

सारथिः – आयुष्मन्[6] ।

हसद्भिरिन्दुं[7] प्रभया तुरङ्गै-
र्हेषासमुत्कम्पितवीरघोणैः ।
स्कन्धे धृतो वानरकेतनेन
विराजमानो वैजयी रथस्ते ॥ ६६ ॥

तदारोहत्वायुष्मान् । ( अर्ज्जुनः रथाधिरोहणं नाटयति । )

---

1. ख. सात्यक्ये (?)
2. ग निधाने Ms. partially broken
3. ग. शङ्कितैव Ms. partially broken
4. ख. भवानपूर्व ०
   ग. भवानप्यव ० Ms. partially broken
5. ख. संग्रामेश (?)
6. ख. आयुष्मान्
7. ख. हस्तद्भरिन्दुं

सारथिः—आयुष्मन्[1] ! पश्य ।

व्यूहेऽस्मिन् सरसिजमण्डलावकाशे[2]
प्रम्लोचा करधृतरत्नचापकोषा ।
अम्भोजध्वजसुभगे रथे स्फुरन्ती[3]
देवीव त्रिभुवनसुन्दरी[4] विभाति ॥ ६७ ॥

( निर्वर्ण्य स्वगतम् )

कनकारविन्दशुभकेतने रथे
कमलेक्षणा[5] कलितरत्नकार्मुका ।
चलुकीकरोति जनधैर्यवारिधिं
वनितावतार इव केलनीपतेः ॥ ६८ ॥

( प्रकाशम् ) महाभाग !

माया वाऽस्तु विमोहो वा
स्वप्नो वा सत्यमेव वा ।
अदृष्टमश्रुतं पूर्व—
मिदमद्भुतमीक्ष्यते[6] ॥ ६९ ॥

---

1. ख. आयुष्मान्
2. ख. ० विकाशे
3. ख. स्फुरभि
4. ख. सुन्दरि ०
5. ख. कोमलेक्षणा (?)
6. ख. ० मिदरमहत ०

अर्ज्जुनः[1] —

सरोजव्यूहाग्रे सरसिजमुखी शोणितहये[2]
शताङ्गे[3] राजन्तो रुचिरतरकीरध्वजवरे[4] ।
दधाना कोदण्डं नयनजलितैरुन्मुखपरं[5]
समस्या सैषासीदहमहमिका काऽपि रसयोः ॥ ७० ॥

सारथिः—इयं मदनमेखला नाम ।

अर्ज्जुनः—भवतु भवतु । इदानोमेव परिचितापि वीरवेशविशेषेणान्यथैव[6] दृश्यते ।
(अन्यतो निर्दिश्य)

केयं शक्तिमती भाति केकीध्वजशुभे रथे ।
कौमारीशक्तिवद्वामे कुमारी कनकोज्ज्वला ॥ ७१ ॥

सारथिः एषा भुवनमोहिनो[7] नाम ।

अर्ज्जुनः - (अन्यतो निर्दिश्य) केयं दक्षिणतः ?

मुखे दधानालसमन्दहासं
करे धुनाना चलचन्द्रहासम् ।
चक्रध्वजे पश्य रथे स्फुरन्ती
शृङ्गारवीरद्वयदेवतेव ॥ ७२ ॥

सारथिः—सेयं विलासवती नाम ।

---

1. ख. सारथिः
2. ख. शोणिमहये
3. ख. ससङ्गे
4. ख. रुचिर ०
5. ख. ० शरं
6. ख. विशेषणान्यप्यैव (?)
7. ख. भूवन ०

अर्ज्जुनः केयं पृष्ठतो मकरध्वजरथे[1] स्फुरन्ती ?

पूरयन्ती रणारम्भे शङ्खमुत्तुङ्गमण्डलम् ।
बालातपाम्बरे केयं[2] बाला बालेव शोभते ॥ ७३ ॥

सारथिः—इयमेषा विभ्रममञ्जरी नाम ।

अर्ज्जुनः—( सकौतुकं निर्वर्ण्य )

सव्यापसव्यक्रमलोलवेणा-
विवर्त्तनोत्क्षिप्तकषाभ्रमेण[3] ।
कुरङ्गवेगान्नटयन्ति[4] भूय-
स्तुरङ्गमान्[5] पश्य कुरङ्गनेत्राः[6] ॥ ७४ ॥

किं च,

सुश्रोणयः श्रुतिमुखोन्नमिता भवन्त—[7]
स्तत्कुम्बलग्नकठिनस्तनकुम्भहाराः[8]
लीलागतेषु विजितान्नधिरुह्य नागा—
न्नासां[9] नयन्ति सरलोन्नमितपुष्कराग्रान् ॥ ७५ ॥

---

1. ख. मकरध्वजे रथे
2. ख. बालालपाम्बरेतेयं (?)
3. ख. ० कशा ०
4. ख. कुरङ्गवेशान्नटयन्ती
5. ख तुरङ्गमान
6. ख. कुरङ्गनेला
7. ख. श्रुतिमुखोन्नमिते भवक्ता ० (?)
8. ख. स्तकुम्भ ० (?)
9. ख. नास्यां

फलकावगुण्ठितघनस्तनाञ्चलं
करवारिजेन तरवारिवेल्लनैः[1] ।
चरणक्रमाचरणविभ्रमभ्रमाः
प्रमदा नटन्ति समदा रणाङ्गणे[2] ॥ ७६ ॥

सारथिः—( विलोक्य सहासम् ) आयुष्मन् !

प्रसङ्गे पङ्कजाकीर्णा
प्रद्युम्नोऽयं पुरःसरः ।
तटस्था विव दृश्येते[3]
वृषकेतनसात्यकी ॥ ७७ ॥

पश्यन्तु.

अनादरकृतासङ्ग—
मस्माकं चलितं बलम् ।
महारथत्रयेणैव[4]
त्रिकूटमिव दृश्यते ॥ ७८ ॥

---

1. ख. करवारिजान्तरे वारिवेल्लनैः
2. ख. समदारगाङ्गणे
3. ख. दृशेन्ते
4. ख. त्रयणैव

उत्तप्रहस्तैर्गतिवेगपद्यं —[1]
महासिधारैर्निपुणा सवारैः[2] ।
रथाधिरोहैः सुभटप्ररोहै
रमाः क्रमारम्भमभूमिगन्ति[3] ॥ ७९ ॥

पश्यन्तं,

अन्योन्यशस्त्रसंघट्ट—
ज्वालज्वलनसंमिन्नम्[4] ।
नासीरवीरसंरम्भं
जातमत्युल्बणं[5] रणम् ॥ ८० ॥

अर्जुनः—( विलोक्य साश्चर्यम् )

शरधारा विमुञ्चन्ति
कालिका इव बालिकाः ।
किरीटशृङ्गैरानम्रैः[6]
सहन्ते सुभटर्षभाः ॥ ८१ ॥

---

1. ख. ० रतिवेगम with only space for one syllable.
2. ख. ० नपुणाश्ववारैः
3. ख. क्रिमारम्भममू मिलन्ति
4. ख. ज्वलज्वलनभिद्धायं
5. ख. जातमत्यल्पतां
6. ख. किरोटि ० ० नम्रै

किं च,

विद्रवन्ति रणे वीरा मीनकेतनसन्निधिम्।
समुद्रलहरीक्षिप्ताः फेनपुञ्जास्तटं यथा ॥ ८२ ॥

सारथिः—देव !

अबलानामिदं युद्धमित्युपेक्षा[1] न युज्यते।
अरणेर्वा मणेर्वास्तु दहत्येव[2] हि पावकः ॥ ८३ ॥

( नेपथ्ये )

मुक्तचापाः कथं[3] पापाः पलायध्वं रणाङ्गणे।
प्रबलानां[4] कथं भीतिरबलाभ्यो[5] भवादृशाम् ॥ ८४ ॥

अर्जुनः—( विलोक्य सकौतुकम् )

महारयप्रचयहयक्रमोल्लस—
त्प्रकीर्णतस्तवकविशेषवाजिनः[6]।
नभोऽम्बुधिप्रचलितमीनकेतनः
समुत्थितो बलमभिमन्मथो रथः ॥ ८५ ॥

सारथिः—( विलोक्य ) देव !

---

1. ख. ० मित्यप्रेक्षा (?)
2. ख शरणेर्वास्तु दाहत्येव (?)
3. ख. कथ (?)
4. ख. प्रबलायां
5. ख. भिति ० (?)
6. ख. प्रकीर्णस्तेबक ० (?)

इक्षुचापमतिकोमले रसे
रुद्रचापमतिनिष्ठुरे रसे[1] ।
यः करोति करयोः सुनो हरे—
स्तस्य का मिलतु कामिनी पुरः ॥ ८६ ॥

प्रमदाप्रधनाभिमुखं प्रचलति एव प्रद्युम्नः । इयं मदनमेखला ।

स्वनितम्बविम्बसमचक्रमण्डले
शुककेतनेऽप्रतिहते रथे स्थिता ।
निजचिल्लिवल्लिरुचिरे शरासने
विशिखं निधाय निजलोचनान्तवत् ॥ ८७ ॥

किं ब्रवीति ?

हराग्निना पूर्वमनङ्गगात्रे बाणाग्निना तं[2] प्रतिभाविनो सा ।
हराङ्गनानां विवरामृतौघै[3] राजीवराजीव विलोचनत्वम् ॥ ८८ ॥

सारथिः—किं ब्रवीति प्रद्युम्नः[4] ?

स्त्रैणं संवर्मयन्तीह स्वेच्छया वद दुर्मदे ।
अथवा कूटराद्यस्यस्तव नाशान्न पातकम् ॥ ८९ ॥

---

1. ख. ० निष्ठुररसे (?)
2. ख. ० मनङ्गगते बाणाग्निना प्र प्रति ० (?)
3. ख. इहाङ्गनाना विवरमृतोघै (?)
4. ख. प्रद्युम्न

अर्जुनः—( विलोक्य साश्चर्य्यम् )

अन्योन्यसंघट्टमवाप्य मध्ये
निवृत्य पश्चात्पुनरेव लग्नाः[1] ।
उत्तानशृङ्गध्वनयः क्रमेण
मिलन्ति बाणा उरगा इवामी[2] ॥ ६० ॥

सारथिः—देव ! पश्यन्तु—

खण्डिता पञ्चबाणस्य विशिखा पञ्चधा तया ।
भ्रमणैः पश्य शोभन्ते चक्राणीव रणाङ्गणे ॥ ६१ ॥

अर्ज्जुनः—( विलोक्य सकौतुकम् )

लाघवादुपरि यान्ति[3] पक्षिणो
गौरवेण फलिनः पतन्त्यधः ।
छेदवेगचलिता पतन्त्यधो[4]
बाणराजिशकला रणाङ्गणे ॥ ६२ ॥

सारथिः[5]—किं ब्रवीत्येषा ? ( नेपथ्ये )

प्रद्युम्न पश्य मद्बाणैस्त्वद्बाणा[6] पञ्चधा कृताः ।
प्रपञ्चयति पञ्चेषोर्भाविनीं तव[7] पञ्चताम् ॥ ६३ ॥

---

1. ख. निवर्त्यपश्चात्पुनराव ० (?)
2. ख. बाणा भरगा (or भरणा) तवामी (?)
3. ख. ० पान्त ०
4. ख. ० पतिता पतत्त्वधो (?)
5. ख. अर्ज्जुनः
6. ख. पश्यमबाणैस्त्वबाणा (?)
7. ख. पञ्चमो भावीनीं तत

तद्धि,

भाविनीं पञ्चतां मुक्त्वा मामेव[1] भज भाविनीम्।
एकेन विशिखेनैव पञ्चता ते प्रपञ्च्यते ॥

सारथिः—किमाह प्रद्युम्नः ? ( नेपथ्ये )

नारीकञ्चुकमुत्सृज्य कस्त्वमाविर्भव[2] क्षणम् ।
एकेन विशिखेनैव कथाशेषीकरिष्ये मो[3] ॥ ६५ ॥

अर्ज्जुनः—( सवितर्कम् ) किमेतत् ?

तत्र वा सरसि स्नात्वा वीरनारीत्वमागता ।
यस्य स्पर्शादयं वाजी बडवाभावमागमत्[4] ॥ ६६ ॥

अथवा,

अमृताहरणेऽधीत्य स्त्रीरूपकुहनां हरेः[5] ।
युध्यन्ते राक्षसा एव स्त्रीरूपेणावगुण्ठिताः[6] ॥ ६७ ॥

सारथिः—देव ! पश्यन्तु ।

छिन्नौ[7] भटाभ्यां वेगेन बाणव्रातेन धावितौ ।
उड्डीनाविव दृश्येते केकीहंसौ ध्वजीकृतौ ॥ ६८ ॥

---

1. ख. मुक्तयमेव
2. ख. कस्त्वमा ० (?)
3. ख. कथाशेषा करिष्यते
4. ख. ० वानी वढवी ० (?)
5. ख. ० धित्य ००० हरे (?)
6. ख. ० रूपेनाव ०
7. ख. छिनो

अर्जुनः—( विलोक्य ) साधु साधु[1] ।

एकेन चापेन मरालकेतो—
र्भीतास्तुरङ्गा विनिकृत्तयोक्त्राः[2] ।
पराङ् मुखः स्यन्दन एव जातः
सन्धानचातुर्य्यमिदं[3] वदामः ॥ ९९ ॥

सारथिः—किं ब्रवीत्येषा ?

चरन्ति वाजिनः स्वच्छं हंसः खेलति खे तव ।
रथपराङ्मुखो वीरः किं पृष्ठे न च वीदयसे ॥ १०० ॥

अर्जुनः—( विलोक्य )

स्यन्दनं सम्मुखीकृत्य वेगयुक्ततुरङ्गमम्[4] ।
हंसध्वजोऽयं[5] रोषेण किमाह धनुरामृशन् ॥ १०१ ॥

( नेपथ्ये )[6]

आस्तिष्ठ[7] बन्धकि वृथा वनिताविनाश—
पापातिभीरुमनसा[8] समुपेक्षितासि[9] ।
छिन्नं मदीयविशिखेन मुखं तवेदं
चुम्बन्तु जम्बुकगणाः प्रवणा क्षणेन ॥ १०२ ॥

---

1. ख. साधुन्त
2. ख भिता ००० योत्क्राः
3. ख. सन्धानं ०
4. ख. ० कृत्यं वग ०
5. ख. हंस ०
6 Not in the Ms.
7. ख. आतिष्ट
8. ख. पादातिभिरु ०
9. ख. समूपेक्षि—सि with space for one syllable in betwen क्षि & सि

अर्ज्जुनः—कथमेष रौद्रमप्यवगाहते ?

सारथिः—देव !

न जानन्ति रणे[1] वीरा वध्यावध्यविचारणाम् ।
दहत्यरण्ये दावाग्निरोषधीभिर्विषद्रुमान्[2] ॥ १०३ ॥

अर्ज्जुनः—(विलोक्य) साधु ।

अन्योन्यसंघट्टवशेन बाणाः[3]
समुत्थितैर्वह्निकणैः फलेभ्यः[4] ।
विप्लुष्टपक्षा निपतन्ति मध्ये
दावाग्निदग्धा[5] इव दन्दशूकाः ॥ १०४ ॥

सारथिः—( विलोक्य ) देव !

अविश्रमश्रमक्रान्तचेतसोः[6] क्षणमेतयोः ।
सुलोचनासात्यकिभ्यां विश्राम इव दृश्यते[7] ॥ १०५ ॥

अर्ज्जुनः—सारथे[8] ! पश्य ।

पुङ्खानुपुङ्खा सुदृशा विमुक्ताः
पुङ्खेषु लग्ना विशिखाः फलाग्रैः ।
समुज्ज्वलाः पश्य विभान्ति पक्षैः
प्रसूनमाला इव वीरलक्ष्म्याः[9] ॥ १०६ ॥

---

1. ख. जनानन्तरेण
2. ख. ० रोषाधींश्च तृणद्रुमान्
3. ख. ० सङ्घ० ०० बाण
4. ख. कणैः पलेभ्यः
5. ख. हस्ता ०
6. ख. ० क्रान्ता ०
7. ख. दीप्यते
8. Not in the Ms.
9. ख. लक्ष्याः

( विलोक्य )

पश्चार्द्धचन्द्रेण शरेण तस्या—
श्चक्रध्वजः सात्यकिना विभिन्नः ।
जवेन गच्छन् गगने[1] विभाति
स्वर्भानुसंदष्ट[2]इवेन्दुबिम्बः ॥ १०७ ॥

सारथिः—देव ! पश्य पश्य—[3]

शरेण हरिणीदृशो विषमिते युगस्याञ्चले[4]
रथो भ्रमति सात्यकेश्चलकुलालचक्रोपमम् ।
विभिन्नहयबन्धनैर्विषमचक्रचक्रध्वजं[5]
चमच्चमरसञ्चयं त्रुटितकिङ्किणीकार्पणम्[6] ॥ १०८ ॥

अर्ज्जुनः—( विलोक्य )

उत्प्लुत्य वेगेन रथान्तरं वा
रथ्यान्तरं स्वीकुरुते यदैव ।
तदैव[7] संघट्टमुपैति कोऽपि[8]
विलासवत्या वृषकेतनोऽयम् ॥ १०९ ॥

( सश्लाघम् )

एकदा बद्ध एवास्या[9] दृश्यते खटकामुखः[10] ।
बाणा बाणासनादेते किमकस्माद्विनिर्गताः ? ॥ ११० ॥

---

1. ख. गमने
2. ख. स्वभानु ०
3. ख पश्यन्त
4. ख. युगसान्चले
5. ख विभिन्नंहयवन्धनं विषमचक्रध्वजं
6. ख. चमहंमगसंचयं तृणित ०
7. ख. यदैव
8. ख. कोपि
9. ख. एवास्य
10. A particular position of the hand while shooting an arrow is called खटकामुख

सारथिः—देव ! पश्य पश्य[1]—

उभयोः[2] प्रतिसन्धानैः पुरोयातुमनीश्वराः ।
मध्ये परस्परासङ्गाद्दोलायन्ते शिलीमुखाः[3] ॥ १११ ॥

अर्ज्जुनः ( विलोक्य )

आलोलकुण्डलझलत्कृतगण्डमूल[4]–
मुत्कूलघर्मजलदन्तुरितालकान्तम्[5] ।
वेणीविवर्त्तवलितं[6] विषमेषुयुद्धे
वीरायितं वितनुते वनजायताक्षी[7] ॥ ११२ ॥

किं च,

मन्दहासेन रोषेण मुखमस्या[8] विराजते ।
कस्तूरीतिलकाङ्केन[9] राकासन्ध्यासुधांशुवत् ॥ ११३ ॥

सारथिः - पश्य पश्य[10]—

छिन्नो यदास्या मकरध्वजोऽयं[11]
सन्धानवेगाद्वृषकेतनेन[12] ।
त्रिधा करोत्यस्य तदैव[13] बाला
युगं युताश्वं[14] शरयोर्युगेन ॥ ११४ ॥

---

1. ख. पश्यन्त
2. ख. उभयो
3. ख. शिलामुखाः
4. ख. ० झनत्कृत ०
5. ख मुकूल ०
6. ख. विवत्त ०
7. ख. वनजायजाक्षी
8. ख. मुखमस्य
9. ख. ० तिलकार्द्धेन
10. ख. पश्यन्त
11. ख. यदास्यन्मकर ०
12. ख. ० वेगावृष ०
13. ख. करोत्यसतदैव
14. ख. युगश्वं

अर्ज्जुनः—( विलोक्य) साधु साधु[1] !

> उभयोः शरसन्धानैः क्रमोत्कर्षगुणोत्करैः ।
> उद्धं समितिवीरश्रोः सापानैरिव नीयते[2] ॥ ११५ ॥

(नेपथ्ये) अब्रह्मण्यमब्रह्मण्यम् ।

> महारथै स्त्रिय इति या उपेक्षिता
> निशाचरैः स्फुटमिव गर्ववर्त्तिताः ।
> अरुन्तुदैः शरनिकरैः[3] समन्ततो
> निरन्तरं सुभटकुलानि भिन्दते ॥ ११६ ॥

अर्ज्जुनः—( विलोक्य) कथमुन्मर्य्यादभयङ्करः सङ्करः सञ्जातः[4] ।

> परागैरथ च क्रोधैः शरैश्च कवलीकृतम्[5] ।
> दिवस्पृथिव्योरासीत्किं संमेलनकुतूहलम् ॥ ११७ ॥

( नेपथ्ये )

> गाङ्गेयव्यतिकरतोऽप्यसावसह्यः[6]
> संघट्टप्रशमितपञ्चबाणबाणः[7] ।
> प्रम्लोचाशरनिकरैः पराहतानां
> गाण्डीविन् भव शरणं रणे भटानाम् ॥ ११८ ॥

अर्ज्जुनः[8]— सारथे ! प्रेरय । इदमनायत्तदारुणं किमपि संवृत्तं[9] मे वरणम् ।

---

1. ख. साधुन्त
2. ख वीयते
3. ख आरुन्तुदैः शरनतरैः
4. ख. कथमुन्मर्य्या [द ?] भयङ्करः सङ्करप्रवृत्तिः
5. ख. ० क्रोधै राक्षशनवलीकृतः
6. ख. ० प्यामावसह्यः
7. ख. संघट ०
8. Not in the Ms.
9. ख. संवृत्त

सारथिः—यथाज्ञापयति देवः ।

( नेपथ्ये )

पर्वतेन समं द्रष्टुं[1] सङ्गरं रङ्गसङ्गरम् ।
नारदोऽयं समायाति मार्गं तत्र[2] विमानगः ॥ ११९ ॥

अर्जुनः—नमोऽस्मै भगवते । अनपकीर्त्तिमनोरमं विजयं नः प्रयच्छतु भवान् कमलसम्भवाङ्गजन्मा मुनिः । ( इति निष्क्रान्तः)

(ततः प्रविशति पर्वतेन सद्वितीयो नारदः)

नारदः—( निर्वर्ण्य ) हे पर्वत ! पश्य[3] ।

तरन्निव किरीटिनः स्वबलरेणुवारांनिधिं[4]
प्रयाति वरवर्णिनीवरवरूथिनोसन्निधिम् ।
हयैः कृतमहारयैस्तुलितचन्द्रकान्तोच्चयै—
रयं पवननन्दनप्रथितकेतनः स्यन्दनः ॥ १२० ॥

पर्वतः—सखे केयं[5] ?

नवमौक्तिकोल्लसितलोलवेणिका[6]
कुचकुम्भसंयमितरत्नकञ्चुका ।
करवारिजातधृतसज्जकार्मुका[7]
रथिनी विभाति गिरिजेव बालिका ॥ १२१॥

---

1. ख. समुद्देष्टुं
2. ख. दत्त ०
3. ख. पश्यन्त
4. ख. drops स्व ०
5. केयं is not in the Ms.
6. ख. ० वेशिका
7. ख. ० सज्यकार्मुका

कनकारविन्दकृतकेतुसुन्दरं
चलनोल्लसच्चटुलचारुचामरम्[1] ।
हरिभिर्हरिन्मणिनिभैः[2] क्रमक्रमं
रथमुन्मुखं कलयते[3] किरीटिनः ॥ १२२ ॥

नारदः[4]—

प्रम्लोचा नाम पद्माक्षी स्त्रीराज्ये सत्यमीश्वरी ।
यातिशेते गुडाकेशं नर्मभिः शरकर्मभिः[5] ॥ १२३ ॥

तदवलोकनीयमस्ति[6] । द्रुतमासज्यताम्[7] । (इत्युभौ[8] आकाशे योगपट्टमासज्योपविशतः । )

नारदः—( विलोक्य )

समुद्र इव गम्भीरं हृदयं सव्यसाचिनः ।
रसयोर्लभते सङ्ग[9] गङ्गायामुनयोरपि ॥ १२४ ॥

अस्या विलोक्य वदनं प्रथमं प्रबुद्ध—
पाथोजदर्पदलनं तलिनोदरायाः ।
पार्थः करे न कुरुते विशिखं बलान्
क्रुद्धो भवन्नपि मनाक् परिदेवितेन ॥ १२५ ॥

---

1. ख. ० चारू
2. ख. भरिभिर्हरिमणि ०
3. ख. कलयाते
4. Not in the Ms.
5. ख. गुड़ाकेश नर्मभः शरकर्मभः
6. ख. देवलोक ०
7. ख. द्रृढ़मा ०
8. ख. इत्यभौ
9. ख. सङ्ग

इय प्रम्लोचा—

एवं पश्य मृगाक्ष्या
भावस्निग्धं विलोचनं वदने ।
खेलयति शक्रस्य या
रोषारक्तं शरासनं त्वन्यत्[1] ॥ १२६ ॥

पर्वतः—किं ब्रवीत्यर्जुनः ?

( नेपथ्ये )

शरा मदीयाः सुभटोपभोग्याः[2]
कृशाङ्गि किं ते वनितासु योग्याः ?
वृथाग्रहं मुञ्च कुरु प्रसादं
पृथासुते माऽस्तु कलङ्कसङ्गः ॥ १२७ ॥

नारदः—किमियं ब्रवीति ?

शरादितश्चेत्प्रणयं भजस्व
जयोऽस्तु नोचेत्प्रधनं सहस्व[3] ।
गतिद्वयं मुञ्चसि चेन्महात्मन्[4]
परः कलङ्को भविता शशाङ्के ॥ १२८ ॥

नारदः—( अभिनन्द्य ) समरदर्शनकण्डूयमानयो रसाय व्यञ्जनमुत्तरम्[5] ।

पर्वतः—( श्रवणमभिनीय ) किं ब्रवीत्यर्जुनः ?

---

1. ख. शक्रश्वनो रोषारक्तं शरासनेत्वन्वं
2. ख. ० पभोग्यां
3. ख. जयोस्त कश्चेत्प्रधनं सहस्य
4. ख. महासन्
5. ख. वाञ्जन ०

( नेपथ्ये )

भो भो दिक्पालाः[1] ! संशृणुध्वम् ।

रामौ महान्तौ[2] वनितावधं तौ
कर्त्तुं च तर्त्तुं च परं समर्थौ ।
आर्यस्य[3] कार्यैकवशंवदोऽयं
तत्कर्त्तुमल्पोऽपि समुद्यतोऽस्मि ॥ १२६ ॥

नारदः – साधु । उचितमालपसि[4] कुलशीलयोः । (हर्षमभिनीय) कथं प्रवृत्त एव प्रम्लोचार्ज्जुनयोः ! तथा हि—

कोदण्डदण्डपरिवेशविशेषराजन्—
मार्त्तण्डमण्डलयुगोदयभावभाजः
उद्द्योतयन्ति गगनं विदलत्स्फुलिङ्गै[5]—
र्बाणाः परस्परविसर्पणजातसाणाः ॥ १३० ॥

(निर्वर्ण्य) स्वेदभेदगलद्रालकस्तूरीश्च श्रोलेखया[6] ।
चापे रूपेऽपि पद्माक्षी साम्परायेऽर्ज्जुनायते ॥ १३१ ॥

पर्वतः – एवमेव ।

कर्णोत्पलेन सुमुखी परिमार्ज्य[7] मन्द्रं
स्वेदोद्गमानुदयतो[8] मृदुले कपोले ।
पश्यार्ज्जुनेन सदयं विशिखान् विमुक्तान्
प्रत्यादिशत्यलसयोजितसायकेन[9] ॥ १३२ ॥

---

1. ख. दिक्पाला
2. ख. महाभौ
3. ख. आर्वसि
4. ख. ० साधुन्त । उचितमालापसि
5. ख. वदलस्फुलिङ्गे
6. ख. शुश्रीलेखया
7. ख. ० ज्जुनाये
8. ख. परिमार्जि
9. ख. स्वेदोद्गमादुदयतो
10. ख. ० संयोजितसात्यकेन

नारदः—( सकौतुकम् )

विराटनगरे पूर्वंदृष्टे चोत्तरगोग्रहे[1] ।
बृहन्नलापचारेण बालेयं प्रतिभाति मे ॥ १३३ ॥

पर्वतः –( साश्चर्यम् ) सखे पश्य ।

उत्क्षेपितो रथस्तस्या विशिखैः कपिकेतनः ।
गन्धर्वनगराकारः पश्याकाशे विवर्त्तते[2] ॥ १३४ ॥

नारदः—पद्भ्यां रथमवष्टभ्य[3] किं ब्रवीत्यर्ज्जुनः ?

( नेपथ्ये )

लोकातिशायि यत्किञ्चित्कृत्वा पुंवत्प्रगल्भसे[4] ।
ममाविधानबाणानां जानीषे सुभ्रू वेदनाम् ॥ १३५ ॥

पर्वतः—सखे ! शृणु किमियं ब्रवीति ?

( नेपथ्ये सरोषहासम् )

सत्यं तदेव गाण्डीवं सत्यं त्वमसि सोऽर्ज्जुनः ।
येन त्वं विजयी संख्ये स ते नास्तीह सारथिः[5] ॥ १३६ ॥

नारदः—( श्रुत्वा ) सम्यगाह । पर्वत ! पश्य ।

विचित्रपत्रोज्ज्वलजातरूपै—
र्गुणावदातैरिव पारिजातैः ।
गाण्डीविमुक्तैर्विशिखैः सुपङ्खै—
रस्या रथश्चैत्ररथत्वमेति ॥ १३७ ॥

---

1. ख. पूर्वं मतिष्ठच्चोर ०
2. ख. ख्रिवर्त्तिते
3. ख. रथमविष्टत् भू
4. ख. ० शायिनकं चिकृत्वपुवप्रगल्भसे
5. ख. सतेनास्ती सारथिः

नारदः—वर्द्धयति नयनसाफल्यदार्या कलहाङ्कुरः। अस्या कलहात्—

पार्थेन लघुहस्तेन च्छिन्ने हयनिबन्धने।
अश्वामिव महावेगादश्वमश्वोऽनुधावति॥ १३८॥

पर्वतः—सखे पश्य[1]। सत्वरमेषा मदनमेखलासमानीतरथमारुह्य[2]—

एणा[3]शोणितविलोचनोत्पला
स्वेददन्तुरितचूर्णकुन्तला[4]।
आननेन मसृणेन कुप्यता
भाविनी विजयते[5] रथोद्धता॥ १३९॥

नारदः—विभाति संक्रन्दननन्दनस्य
स्थिरीकृत[6]स्यन्दनवाजिराजिः।
मृगेक्षणामुक्तपृषत्कजालै—
र्जालैर्विबद्धेव कुरङ्गमाला[7]॥ १४०॥

पर्वतः—सखे पश्य। कथमर्ज्जुनोऽपि—

अर्द्धचन्द्रेण बाणेन तस्याः[8] कनकपङ्कजम्।
नूनमाकाशगङ्गायाः कमलैः कलहायते॥ १४१॥

(सानन्दम्) कथमोजायितमनया! पश्य[9]।

हिण्डमानमणिप्रोतगण्डमण्डलकुण्डला।
कुण्डलीकृतकोदण्डा चण्डा चण्डीव राजते॥ १४२॥

---

1. ख. पश्यन्त
2. ख. ० मद्यारुह्य
3. ख. त्वेष
4. ख. drops one ० द ०
5. ख. विषयते
6. ख. स्थिरिकृत्य
7. ख. ० विबोद्धेव कुरङ्गमालां
8. ख. चसाः
9. ख. पश्यन्त

( सभयम् ) किमेतत ?

प्रथमोदितभानुमण्डलाभं वदनं बन्धुरकुण्डलं वहन्ती ।
सहस्रशाखं विशिखं गाढमुखं विमोक्तुमीष्टे ॥ १४३ ॥

नारदः—( विलोक्य ) प्रमादः !

एषा हि वैष्णवीमूर्त्ती राजते[1] ब्रह्मचारिणी ।
सन्धत्ते वैष्णवं शस्त्रं न जाने किं भविष्यति ॥ १४४ ॥

पर्वतः—( सत्रासम् ) पश्य[2] सन्धत्ते—

सन्धत्तेऽसौ कङ्कपत्रं किरीटी
तेजोरूपं निर्गतोल्कासहस्रम् ।
पश्योत्तुङ्गैर्विस्फुलिङ्गैः समिन्धे
तीव्रज्वालं हन्त दिक्चक्रबालम् ॥ १४५ ॥

नारदः— रूपितेयं धनुर्विद्या मूर्त्तिमान् विजयो जयः ।
वैष्णवास्त्रं समुत्क्षिप्तमुभाभ्यां[3] किं भविष्यति ॥ १४६ ॥

पर्वतः—( सभयम् )

उद्दामपावके ज्वाला भासयन्ति हि दिङ्मुखम् । [4]
उभयोरस्त्रसङ्घर्षाज्ज्वलतीव जगत्त्रयम् ॥ १४७ ॥

( इत्युभौ धूमोत्पातविलोचनौ स्थितौ । आकाशे )

---

1. ख॰ राजन्म
2. ख॰ पश्यन्त
3. ख॰ समुत्क्षिप्तशुभाभ्यां
4. ख॰ ० भलविद्गति ०

नारायणस्त्वमसि देव नरस्त्वमेव
शक्तिस्त्वदैव सहजावति काचिदेषा[1] ।
अस्त्रद्वयं च तव दिव्यमहो विवर्त्तं
तत्पाहि[2] पाहि जगदीश्वर विश्वमार्त्तिम्[3] ॥ १४८ ॥

( अन्तरे शङ्खध्वनिः । )

नारदः—( सहर्षमाकर्ण्य )[4]

पार्थप्रम्लोचयोरद्य पाणिग्रहणमङ्गले ।
पाञ्चजन्य उज्जिहीते[5] प्रसन्नमधुरस्वनम्[6] ॥ १४९ ॥

फाल्गुनः[7]—( सानन्दगद्गदम् )

विनताखिलसिद्धिदो विभु—
र्विनतानन्दनपृष्ठमध्यगः ।
भुजदण्डलसत्सुदर्शनं[8]
वपुराविष्कुरुते सुदर्शनम् ॥ १५० ॥

पर्वतः – ( साश्चर्य्यम् ) पश्य[9] !

इदं शरयुगात्तेजश्चक्रे लीनं मधुद्विषः ।
प्रम्लोचा चार्ज्जुनश्चास्य[10] सेवेते चरणाम्बुजम् ॥ १५१ ॥

नारदः—( विलोक्य )

अलंकृतं पुरस्कृत्य तुरगं कमलेक्षणाः ।
प्रवीराश्च तथा मुक्त्या[11] भजन्ते पुरुषोत्तमम् ॥ १५२ ॥

---

1. ख. सहजवति काचित्रेषा
2. ख. स्तयाहि
3. ख. ० मार्त्तम्
4. ख. ० माकर्ण
5. ख. सोज्जहीते
6. ख. ० स्वनः
7. ख. फाल्गुनौ
8. ख. लस्मदर्शनं
9. ख. पश्यन्न
10. ख. चार्ज्जुनौ चास्य
11. ख. प्रविश्चरतपधान्मुक्त्या

तदयमागत एव भगवान ।

धनुर्द्धरैर्महावीरैरेकतः सेवितो विभुः ।
अन्यतः सायुधस्त्रीभी[1] रसयोरयमीश्वरः ।। १५३ ।।

तदहमस्य[2] पार्श्वपरिपालको भवामि ।

( ततः प्रविशति यथानिर्दिष्टो वासुदेवः )

वासुदेवः –( सहासम् ) निवेदितोऽयमर्थः प्रायो नारदेन ।

( नारदः—अवतरणमभिनीयाग्रतः स्थितः । सर्वे नारदमभिवाद्य यथोचितमुपविशन्ति । )

नारदः— रसेन येन देवाद्य निर्वाणो वीरपावकः ।
एतयोर्ब्रह्मचर्य्याग्निं स एव गमयिष्यति ।। १५४ ।।

वासुदेवः – अथकिम् ।

अस्या[3] वीरायतैरेव विजयस्य पराजयः ।
सुरासुररणारम्भगम्भीरभुजशालिनः ।। १५५ ।।

( प्रम्लोचा[4] सलज्जमधोमुखी तिष्ठति )

अर्ज्जुनः—कथं भगवानपि परिहासविलासैः कलहकुतूहलमेनमुत्कूलयति ?

---

1. ख. ० स्त्रीभि ०
2. ख. देहमस्य
3. Not in the Ms.
4. ख. प्रेम्णा

नारदः—( सहासम् )

निर्व्याजवीरकलहे भवतोरिदानीं
माध्यस्थमाचरितमेव मयामुनापि ।
शृङ्गारसारकलहेऽपि सरोरुहाक्ष्या:
पार्थ त्वया मुनिरसौ विभुरेष मृग्य: ॥ १५६ ॥

अर्ज्जुनः— (सलज्जमास्ते )

वासुदेवः— ( स्वकण्ठात्पारिजातमालामुभयोः कण्ठे दत्त्वा ) —

संरक्षितो ययुरयं भवता किरीटिन्
सिद्धाध्वरश्च जनितो भुवि धर्मराजः ।
अस्यां करोऽपि कलितः कमलेक्षणायां
नीतं कुलं च शशिनः परमां प्रतिष्ठाम् ॥ १५७ ॥

अर्ज्जुनः— त्वदीयचरणाम्भोजसेवाहेवाकशालिनाम् ।
अल्पानामपि लोकेऽस्मिन् किमसाध्यं दयानिधे ॥ १५८ ॥

वासुदेवः—तथापीममस्तु—

विजिताखिललोक[1] सव्यसाचिन्
यजतां धर्मसुतः सुखं समृद्धिम्[2] ।
भजतां च भवानत्र समानुरागा[3]—
दनया किञ्चन चेतसः प्रमोदम् ॥ १५९ ॥

अर्ज्जुनः—यथाज्ञापयति भवान् महानुभावः किङ्करेषु वासुदेवः । तदितो यथोचितप्रदेशमवतरामः[4] । (इति निष्क्रान्ताः सर्वे)

---

1. ख. निर्जिता ०
2. ख. यजतीं ० ० सुखसमृद्धिः
3. ख. भजितो च भवान् मानुरागा
4. ख. ० मृवतभावः

( नेपथ्ये भरतवाक्यम् )

अष्टौ हाटकचामराणि कनकच्छत्रं[1] डमड्डिण्डिमं
यो लब्धः प्रथितप्रतापविभवश्रीरुद्रदेवेश्वरात् ।
श्रीजीवः कविडिण्डिमो नृपगुरुर्नानाकलाचञ्चुर—
स्तस्योत्साहवतीति रूपकमिदं सभ्यैः सदा सेव्यताम् ॥ १६० ॥

इति श्रीमत्कविराजराजगुरुत्रिलोचनाचार्यतनयश्रीरत्नावतीनन्दन-
श्रीमन्महामहोपाध्याय-श्रीमद्भगवद्वासुदेव-भक्तिप्रस्थान-
प्रणयनपरमाचार्यकविडिण्डिमवाहिनीपति-
राजगुरु-विरचितमुत्साहवती नाम
रूपकं सम्पूर्णम्[2]

---

1. ख. ० छत्रं
2. ख. ० विरचित उत्साहवती नाम रूपकं सम्पूर्णं । समाप्तेयं नाटिका ।

# श्लोकानुक्रमणी


| श्लोकः | क्रमसंख्या । पुटम् |
|---|---|
| अनादरकृतासङ्गः | ७८ । २० (क) |
| अन्योन्यशस्त्र० | ८० । २०(ख) |
| अन्योन्यसंघट्टमवाप्य | ९० । २३ |
| अन्योन्यसंघट्टवशेन | १०४ । २६ |
| अपि भाग्यमीदृशं | २४ । ७ |
| अबलानामिदं | ८३ । २१ |
| अमृताहरणे | ९७ । २४ |
| अयं स वीरः | ६३ । १६ |
| अर्ज्जुनं बाजिनं | ६२ । १६ |
| अर्द्धचन्द्रेण | १४१ । ३५ |
| अलंकृत्य पुरस्कृत्य | १५२ । ३७ |
| अविश्रमश्रम० | १०५ । २६ |
| अष्टौ हाटकचामराणि | ५,१६० । २,४० |
| अस्मिन् वसन्तसमये | ४ । २ |
| अस्या विलोक्य | १२५ । ३१ |
| अस्या वीरायतै० | १२५ । ३८ |
| अस्याश्चापेन | ५२ । १४ |
| आजन्मब्रह्म ० | १२ । ४ |
| आमुक्तमुक्ताहारेषु | ४४ । १२ |
| आयान्तमाकर्ण्य | ११ । ४ |
| आरज्यद्विषम० | ५५ । १५ |
| आलोलकुण्डल० | ११२ । २८ |
| आस्तिष्ठ बन्धकि | १०२ । २५ |
| इक्षुचाप० | ८६ । २२ |
| इदं शरयुगात्तेज० | १५१ । ३७ |
| उत्क्षिप्तहस्तै ० | ७९ । २०(ख) |
| उत्क्षेपितो रथस्तस्या | १३४ । ३४ |
| उत्प्लुत्य वेगेन | १०६ । २७ |
| उद्दामपावके | १४७ । ३६ |
| उभयोः प्रतिसन्धानैः | १११ । २८ |
| उभयोः शरसन्धानैः | ११५ । २९ |
| एकदा बद्ध | ११० । २७ |
| एकेन चापेन | ९९ । २५ |
| एणशोणित ० | १३९ । ३५ |
| एतदर्थं प्रवीराणां | ४८ । १३ |
| एतां धनुर्गुणैः | ६१ । १६ |
| एतासां विषकन्यानां | ३१ । ९ |
| एतासां स्वामिनी | २९ । ९ |
| एनां प्रणयकोपेषु | ३५ । १० |
| एवं पश्य मृगाक्षया | १२९ । ३२ |

| श्लोकः | क्रमसंख्या । पुटम् |
| --- | --- |
| एष केशर० | १३ । ४ |
| एषाग्रतः कठिन ० | ३२ । ९ |
| एषाहि वैष्णवी | १४४ । ३६ |
| कनकनिकषरेखा | १ । १ |
| कनकारविन्दकृत० | १२२ । ३१ |
| कनकारविन्दशुभ० | ६८ । १८ |
| कर्णोत्पलेन सुमुखी | १३२ । ३३ |
| कामाहवे समुचिता | २० । ६ |
| किरीटिन० | १५ । ५ |
| किं वीरेण रसेन | २१ । ७ |
| कुरुकर्णधार० | ४९ । १३ |
| कुरुवीरवारण० | ५७ । १५ |
| केयं शक्तिमती | ७१ । १९ |
| कोदण्डदण्ड० | १३० । ३३ |
| खण्डिता पञ्चबाणस्य | ९१ । २३ |
| गवां द्विजानां | ४७ । १३ |
| गाङ्गेयव्यतिकर० | ११८ । २९ |
| घोटकब्रह्मचर्यं | ४१ । ११ |
| चन्दन्ति | १६ । ५ |
| चरन्ति वाजिनः | १०० । २५ |
| छिन्नो यदास्या | ११४ । २८ |
| छिन्नौ भटाभ्यां | ९८ । २४ |
| जीवदेवकवेर्वाणी | ६ । २ |
| तत्र वा सरसि | ९६ । २४ |
| तरन्निव किरीटिनः | १२० । ३० |
| ताडकेवास्तु | ५१ । १४ |
| तुरगः प्रमदाभि० | २५ । ८ |
| त्वदीयचरणाम्भोज० | १५८ । ३९ |
| त्वामस्त्रमासाद्य | १७ । ६ |
| देवव्रतप्रमुख० | ५६ । १५ |
| द्वाविमावर्ज्जुनौ | १४ । ५ |
| धनञ्जयः काम० | ४६ । १३ |
| धनुर्द्धरैर्महावीरै० | १५३ । ३८ |
| धर्मात्मजस्य | ३३ । १० |
| न जानन्ति रणे | १०३ । २६ |
| न मन्तव्या शीतलेति | ३७ । ११ |
| नवमौक्तिकोल्लसित | १२१ । ३० |
| नारायणस्त्वमसि | १४८ । ३७ |
| नारीकञ्चुक ० | ९५ । २४ |
| निर्व्याजवीरकलहे | १५९ । ३९ |
| पञ्चबाणस्य | २२ । ७ |
| पर्वतेन समं द्रष्टुं | ११९ । ३० |
| परागैरथ च | ११७ । २९ |
| परन्तपधनञ्जयो | ३४ । १० |
| पश्चार्द्धचन्द्रेण | १०७ । २७ |
| पार्थ एव परं | १८ । ६ |
| पार्थप्रभञ्जनयोरद्य | १४९ । ३७ |
| पार्थेन लघुहस्तेन | १३८ । ३५ |
| पुङ्खानुपुङ्खा | १०६ । २६ |
| पूरयन्ती रणारम्भे | ७३ । २० |
| प्रथमोदितभानु ० | १४३ । ३६ |
| प्रद्युम्न | ९३ । २३ |

| श्लोकः | क्रमसंख्या । पुटम् | श्लोकः | क्रमसंख्या । पुटम् |
|---|---|---|---|
| प्रम्लोचा नाम | १२३ । ३१ | रूपितेयं धनुर्विद्या | १४६ । ३६ |
| प्रसङ्गे पङ्कजाक्षीणां | ७७ । २० (क) | लवणोदतीर० | ३ । १ |
| फलकावगुण्ठित ० | ७६ । २०(क) | लाघवादुपरि | ६२ । २३ |
| बहुदेशागतश्रान्तैः | ३६ । १० | लोकातिशायि | १३५ । ३४ |
| भाविनीं पश्चतां | ६४ । २४ | विचित्रपत्रोज्ज्वला० | १३७ । ३४ |
| भुजयोरपकीर्त्ति० | ५३ । १४ | विजितास्खिललोक० | २५६ । ३६ |
| भूरिश्रवो० | ५० । १४ | विद्रवन्ति रणे | ८२ । २१ |
| भ्रूवल्लरी ० | २३ । ७ | विनताखिलसिद्धिदो | १५० । ७ |
| मत्कङ्कणक्वणन० | १० । ४ | विभाति संक्रन्दन ० | १४० । ३५ |
| मन्दहासेन रोषेण | ११३ । २८ | विराटनगरे | १३३ । ३४ |
| महारथैः स्त्रिय इति | ११६ । २६ | विषमेषुरणोद्योगे | ४५ । १३ |
| महारयप्रचय ० | ८५ । २१ | वीराः समरगम्भीरा | ४२ । १२ |
| महिला अहिलाः | २६ । ८ | व्यूहेऽस्मिन् | ६७ । १८ |
| माया वाऽस्तु | ६६ । १८ | शरधारा | ८१ । २०(ख) |
| मीनध्वजेन | १६ । ६ | शरादितश्चेत् | १२८ । ३२ |
| मुक्तचापाः कथं | ८४ । २१ | शरा मदीयाः | १२७ । ३२ |
| मुखे दधाना | ७२ । १६ | शरासनं रत्नमयं | ६४ । १६ |
| मुच्यतां किं विवादेन | ३८ । ११ | शरेण हरिणीदृशो | १०८ । २७ |
| मृगयारसिकं | २ । १ | शरैरलं | ३० । ६ |
| यः कर्णः कुरुपति ० | ४३ । १२ | संरक्षितं विषम० | ७ । ३ |
| यदि नाभेद्यकवचं | ३६ । ११ | संरक्षितं ययुरयं | १५७ । ३६ |
| यद्याक्रान्त ० | ५४ । १४ | सत्यं तदेव गाण्डीवं | १३६ । ३४ |
| यशो गृहीत० | ६० । १६ | सन्धत्तेऽसौ | १४५ । ३६ |
| यस्या यस्या | २८ । ६ | समुद्र इव गम्भीरं | १२४ । ३१ |
| रसेन येन | १५४ । ३८ | सव्यापसव्य ० | ७४ । २० |
| राजते वाजिराजोऽयं | ६ । ३ | सरोजव्यूहाग्रे | ७० । १६ |
| रामौ महान्तौ | १२६ । ३३ | सारथिं कनक ० | ५६ । १५ |

| श्लोकः | क्रमसंख्या । पुटम् | श्लोकः | क्रमसंख्या । पुटम् |
|---|---|---|---|
| सिञ्जानमञ्जीर० | ६१ । १७ | स्यन्दनं सम्मुखीकृत्य | १०१ । २५ |
| सिञ्जानमञ्जु० | ८ । ३ | स्वनितम्ब ० | ८७ । २२ |
| सुश्रोणयः श्रुति० | ७५ । २० | स्वेदभेदगलद्राल ० | १३१ । ३३ |
| स्त्रीणां राज्यमिदं | २७ । ८ | हतं यत्कौरवं | ५८ । १५ |
| स्त्रीनपुंसकं | ४० । ११ | हराग्निना | ८८ । २२ |
| स्त्रैणं संवर्म ० | ८६ । २२ | हसद्भिरिन्दुं | ६६ । १७ |
| | | हिण्डमानमणि० | १४२ । ३५ |


---